गीर्वाणपत्रिका

त्रैमासिकी / मार्च २०२४

# अनुक्रमणिका

## ॥ गुरूपदेशः ॥



दशमगुरु-परमपूज्य-
श्रीमत्-परिज्ञानाश्रम-स्वामिवर्यः ।

उच्यते यत् भक्तः यदि भक्तिमार्गम् अनुसरति तर्हि सः आत्मज्ञानम् अपि प्राप्तुं शक्नोति । भक्तिः अस्मान् बोधयति यत् अस्माभिः आराध्यमानः ईश्वरः कुत्रापि दूरे स्वर्गलोके न निवसति किन्तु अस्माकं समीपे, स्वहृदये एव स्थित्वा अस्माकं जीवने प्रतिक्षणं मार्गदर्शनं कुर्वन् अस्ति।



एकादशगुरु-परमपूज्य-
श्रीमत्-सद्योजातशङ्कराश्रम-स्वामिवर्यः ।

यदा प्रातःकाले उत्थानम् इव एकः सरलसङ्कल्पः भवता दृढनिश्चयेन आचर्यते तदा चित्ते स्थितैः अनेकैः सम्भ्रमैः सह व्यवहर्तुं शक्यते । इयं तु न केवलं बुद्धिमत्ता अपि तु परिस्थितीः सम्मुखीकर्तुं क्षमता, काचित् भावनिक-शक्तिः अस्ति या भवतः भक्तिं श्रद्धां च संरक्षति । भवतः भक्तिः गभीरा गहना च भविष्यति, श्रद्धा दृढीभूय निष्ठायाः पराकाष्ठां प्राप्स्यति।

गुरूपदेशानुवादः - अर्चना काप्राडक , चेन्नई

## निवेदनम्

ॐ श्रीगुरुभ्यो नमः । ॐ श्रीभवानीशङ्कराय नमः । ॐ श्रीमात्रे नमः ।

**श्रीराम राम रामेति रमे रामे मनोरमे ।**

**सहस्रनाम तत्तुल्यं राम नाम वरानने ॥**

प्रभुश्रीरामचन्द्रस्य अस्माकं सनातनधर्मसंस्कृत्याम् अतिविशेषस्थानं वर्तते । भगवान् श्रीरामः परमात्मनः विष्णोः सप्तमः अवतारः ।आदिकवि-महर्षि-वाल्मिकिना सुविरचितं रामायण-महाकाव्यं भगवतः श्रीरामस्य चरित्रं सङ्कथयति । इदं कालातीतं वेदतुल्य-वाल्मिकिरामायणं प्राचीनकालादेव न तु केवलम् अस्माकं भारतदेशे अपि तु विश्वस्य भिन्नविभिन्नभागेषु सुविख्यातं वर्तते।

प्रभुश्रीरामचन्द्रस्य जन्मस्थानम् अयोध्यानगरम् । अस्य सम्मानार्थं स्मृत्यर्थं च अयोध्यायां निर्मितम् अनादिकालतः विद्यमानं भव्यराममन्दिरम् अस्माकं पवित्रश्रद्धास्थानम् आसीत् । परन्तु १५२८ तमे वर्षे विदेशीय-आक्रमकैः तत् विध्वंसितम् । अयं तु अस्माकं कृते महान् आघातः आसीत् । अस्य अन्यायस्य विरोधार्थं शताब्दशः सङ्घर्षः प्राचलत् । अन्ततः सनातनधर्मः विजयी सम्भूय भव्य-दिव्य-श्रीराममन्दिरस्य पुनर्निर्माणं सञ्जातम् । जनवरीमासे २२ दिनाङ्कतमे रामलल्लायाः प्राणप्रतिष्ठा-समारोहः देश विदेशेषु दीपावलीपर्व इव सुसम्पन्नः ।

सम्प्रति यत्र मन्दिरं तिष्ठति तस्य स्थानस्य अधिग्रहणात् आरभ्य मन्दिरनिर्माणं तथा तस्य  भव्य-उद्घाटनं पर्यन्तं च प्रवासः प्रदीर्घः भावपूर्णः सङ्घर्षपूर्णः च आसीत् । कोटि-कोटि-रामभक्तानाम् आकाङ्क्षाम् , नितरां श्रद्धाम् , अटलं निश्चयं च प्रतिबिम्बयन् तिष्ठति अयं प्रासादः । श्रीराममन्दिरस्य निर्माणम् अस्माकं भक्ति-विश्वासयोः पराकाष्ठायाः तथा प्रतिबद्धतायाः प्रतीकम् अस्ति । इदम् ऐतिहासिकम् अयोध्याराममन्दिरं भारतदेशस्य गौरवस्य स्मारकम् एव ।

भगवान् श्रीरामः मर्यादापुरुषोत्तमः इति वन्दनीयः । सः न तु केवलं आदर्शपुत्रः अपि तु आदर्शभ्राता , आदर्शपतिः, आदर्शमित्रम् , आदर्शराजा च । सः आदर्शजीवनस्य पुरस्कर्ता तथा आत्मोन्नत्यर्थं, सर्वहितकल्याणार्थं च आवश्यकगुणानां सन्दोहः। धर्मस्य सर्वतत्त्वानां नैतिकमूल्यानां च समर्थकः। रामराज्ये सर्वे प्रसन्नाः सन्तुष्टाः च आसन् । प्रभुश्रीरामचन्द्रस्य अनुग्रहः सर्वेषाम् उपरि सर्वदा भवतु।

गीर्वाणप्रतिष्ठायाः इदं पत्रिकापुष्पं वयं परमपूज्यगुरुवर्याणां  चरणकमलयोः सहर्षं समर्पयामः ।

**-सम्पादिका**

## चिन्तनम्

**- जया तल्गेरी , पुण्यनगरी**

गतजूनमासे ' तमसो मा ज्योतिर्गमय ' इति वचनम् अधिकृत्य गीर्वाणप्रतिष्ठया आयोजिते चिन्तने बहव: सदस्या: सहभागं गृहीत्वा स्वमतं प्रकटीकृतवन्तः।

तस्य चिन्तनस्य सारांशः -

' तमसो मा ज्योतिर्गमय ' अस्मिन् वचने 'तमस्' इत्युक्ते अन्धःकारः। ज्योतिः इत्युक्ते प्रकाशः। अस्मिन् वचने अन्धकारतः प्रकाशं प्रति अस्माकं प्रयाणं कारयतु इति प्रार्थना कृता अस्ति।

अन्धःकारः कस्यापि भवितुं शक्यते। उदा. अज्ञानस्य अन्धकारः। स्वात्मस्वरूपस्य अन्धकारः। विस्मरणरूपी अन्धःकारः। नैराश्यस्य अन्धःकारः। दुःख-दैन्य-अनारोग्यरूपी अन्धःकारः। अहङ्कारादि-षड्रिपुरूपी अन्धःकारः।

प्रकाशस्य अपि विविधानि रूपाणि। ज्ञानस्य प्रकाशः। आशायाः प्रकाशः। दुःख-दैन्य-अनारोग्य-षड्रीपूणां निर्मूलनरूपी प्रकाशः।

विविधरूपी अन्धःकारस्य निराकरणं कथं भवेत् ?

**अज्ञानान्धकारः**

अज्ञानस्य निराकरणं ज्ञानेन एव सिद्ध्यति। तदर्थे गुरुरेव साधनं खलु। गुरोः उपदेशं निष्ठया अनुसृत्य वयम् अस्माकम् अज्ञानस्य निराकरणं कर्तुं शक्नुमः। यद्यपि ज्ञानार्थम् अन्यानि साधनानि अपि उपलब्धानि तथापि गुरोः प्राप्तं ज्ञानं जीवनस्य अन्तिमलक्ष्यं प्राप्तुम् अनिवार्यम्।

### नैराश्यान्धकारः

लौकिक-जीवने नैराश्यं कथम् आगच्छति ? असिद्धिवशात् वैफल्यात् च नैराश्यम् उद्भवति । ईदृश्याम् अवस्थायाम् अस्माकम् आत्मविश्वासस्य अभावः तथा कार्पण्यदोषः भवितुं शक्येते । तदा किञ्चित् आत्मान्वेषणं कृत्वा योग्यं मार्गदर्शनं गृहीत्वा अग्रे गन्तव्यम् । आत्मबलं वर्धितव्यम् । लक्ष्यप्राप्तिं प्रति तीव्रेच्छा आवश्यकी । पराभवः न स्वीकर्तव्यः ।

### दुःख-दैन्य-अनारोग्यम्

अनेन ग्रस्तायाम् अवस्थायां सकारात्मकचिन्तनम् आवश्यकम् । यत् प्राप्तं तस्य विषये कृतज्ञता भवेत्। प्रसादरूपेण प्राप्तप्रसङ्गस्य स्वीकृतिः तथा धैर्यपूर्वकं सम्मुखीकरणम् आवश्यकम् । उचितोपचारस्य अवलम्बनं करणीयम् ।

### षड्रिपवः

कामक्रोधादीनां षड्रिपूणां निर्मूलनम् अत्यन्तं कठिनम् । योग्यं मार्गदर्शनं कुतः प्राप्यते ? गुरुः, सुहृत् , आत्मीयजनाः, सत्सङ्गः - एतेषां सर्वेषाम् स्वानुभवेभ्यः प्राप्तज्ञानेन मार्गदर्शनं प्राप्तुं शक्यम् । तत् साहाय्यम् अनुसृत्य अस्माकं जीवनं सम्यक् रीत्या सम्पन्नं भवेत् । एतस्मिन् कार्ये लक्ष्यप्राप्तिं प्रति तीव्रेच्छा आवश्यकी । पराभूतिः न स्वीकर्तव्या । स्वात्मावलोकनमपि आवश्यकमस्ति वारंवारम् ।

अन्ततो गत्वा एतस्मिन् जीवने गुरुरेव भवरोगवैद्यः । तस्य चरणकमले दृढतया धृत्वा पूर्णशरणागतिः कर्तव्या । एषा एव सर्वरोगनिवारणार्थे महौषधिः ।

एवं वयं तमसः ज्योतिं प्रति गन्तुं शक्नुमः ।

## सुभाषितम्

- **पवन काप्राडक, चेन्नई**

**अपूर्वः कोऽपि कोशोऽयं विद्यते तव भारति ।**
**व्ययतो वृद्धिमायाति क्षयमायाति सञ्चयात् ॥**

**भावार्थः -**

हे देवि सरस्वति ! भवत्याः ज्ञानभण्डारम् अद्भुतम् अस्ति , यतः तस्मात् यदि स्वीक्रियते, तस्य वर्धनं भवति । यदि तत्र सञ्चयनं कुर्मः तर्हि तत् न्यूनं भवति। यदा ज्ञानम् अन्यैः सह अधिकं सम्भज्यते तदा तत् वर्धते। विमर्श-परिचर्चा-माध्यमेन तत् गभीरतया अवगम्यते । यदि ज्ञानं न उपयुज्यते तर्हि तत् सर्वथा नष्टं भवति। अतः यत् ज्ञानं लभ्यते तत् प्रवर्धयतु , सम्भजतु तथा सरस्वतीदेव्याः अद्भुत-उपहारस्य सम्मानं करोतु ।

# अयोध्याराममन्दिरम्

- आरती अरुण सशितल, मुम्बई

अयोध्यानगर्यां श्रीरामप्राणप्रतिष्ठा
सर्वत्र प्रसृता दिव्यता सुमङ्गलता ।
दीर्घकालतः यस्य आसीत् प्रतीक्षा
सा सम्पूर्णतया साकारीभूता ॥१॥

कृष्णवर्णा उज्ज्वल-उत्कीर्णा
मन्दिरस्य भव्यगर्भगृहे स्थिता ।
नानापुष्पालङ्कारैः अलङ्कृता
श्रीराममूर्तिः अति-विलोभनीया ॥२॥



समन्ततः असङ्ख्यदीपप्रज्वालनेन
पदे पदे सुश्राव्यरामस्तुतिगायनेन ।
देशविदेशे सम्पूर्णवातावरणं
श्रद्धया भक्त्या सञ्जातं श्रीराममयम् ॥३॥

सुनिनादिताः स्तवन-मन्त्रघोषाः
आमन्त्रिताः श्रेष्ठाः मान्यवराः ।
सन्तसमागताश्च  यतिवराः
नेत्रेभ्यः स्रुताः सात्त्विकानन्दाश्रुधाराः ॥४॥

भारतवर्षस्य इतिहासे एषा
सुवर्णाक्षरैः लेखनीया घटना ।
श्रीरामजन्मभूमि-अयोध्या
सम्भूता वन्दनीया प्रेक्षणीया ॥५॥

# ज्ञानदाता क्षत्रियः प्रवाहणः

**– वैशाली कोप्पीकर , बेङ्गलूरु**

जीवात्मा पञ्चमहाभूतैः युक्तः देही भवति । सृष्टौ व्यवहर्तुं तस्य कृते देहस्य आवश्यकता वर्तते । परं कर्मविपाकेन सः जनिमरणचक्रे भ्रमति । परब्रह्मणः प्राप्त्यर्थं देही भूत्वा यदा जीवात्मा यतते तदा तेन कीदृशी साधना उपासना आचरणीया इति ब्रह्मसूत्रस्य तृतीये अध्याये ज्ञापितं वर्तते । तस्य आचरणार्थं जीवात्मनः विषये ज्ञानमावश्यकम् । जीवात्मनः देहान्तरप्राप्त्यर्थं प्रयाणं भवति तदा सः सूक्ष्मतत्वैः युक्तः एव प्रयाणं करोति । एतस्मिन् विषये एतावत् पर्यन्तम् अस्माकं धारणा एवमासीत् यत् ब्राह्मणाः एव विद्यादानपात्राः इति । परं छान्दोग्योपनिषदि कथां पश्यामः यत् क्षत्रियेण महाराजेन प्रवाहणेन श्वेतकेतुः उपदिष्टः इति ।

जीवलपुत्रः प्रवाहणो नाम राजा स्वसभामागतं श्वेतकेतुं पप्रच्छ ।

१) अपि प्रजाः इतः अधि प्रयान्ति इति त्वं जानासि ? (अधि-उपरि)

२) अपि ताः प्रजाः पुनरावर्तन्ते ?

३) अपि त्वं देवयानस्य पितृयाणस्य च व्यावर्तनां जानासि ?

४) कथं स पितृलोकः न सम्पूर्यते ?

५) कथं पञ्चम्याम् आहुतौ आपः पुरुषवचसः भवन्ति ?

एकस्यापि प्रश्नस्य उत्तरं दातुमसमर्थः श्वेतकेतुः पितरं प्रति गत्वा कथमेतद् न अध्यापितम् इति आक्षेपं कृतवान् । पितुः गौतमस्यापि अस्मिन् विषये अज्ञानमेव । अतः गौतमः पुत्रेण श्वेतकेतुना सह प्रवाहणं प्रति गत्वा ज्ञानार्थम् अयाचत । प्रवाहणराजेन (क्षत्रियेण) श्वेतकेतवे (ब्राह्मणाय) एतत् ज्ञानं प्रदत्तम् ।

देवयानेन गताः जीवात्मानः ब्रह्म प्राप्नुवन्ति । पितृयाणेन गताः अन्नरूपेण पुनरावर्तन्ते । (अन्नाद् वै पुरुषः।) ये द्वाभ्याम् अपि न गच्छन्ति ते असकृत् आवर्तीनि भूतानि भवन्ति । अल्पयोनिषु वा प्राणियोनिषु ते जायन्ते । अतः पितृलोकः कदापि न सम्पूर्यते ।

द्युलोकाग्नौ देवाः श्रद्धायाः आहुतिं ददति । तेन सोम, सोमेन वर्षा, वर्षया अन्नम्, अन्नाद्वीर्यः । एवं सर्वेषां तत्त्वानां सूक्ष्मः समुदायः जलमिति । शरीरसहितः जीवात्मा वीर्यस्थितः भवति । एकस्मात् शरीरात् अन्यत् शरीरं प्रविशति । अतः जलं पुरुषसंज्ञकं भवति इत्येतत्सर्वम् अध्यापयति राजा प्रवाहणः ।

# कपीनां सङ्ग्रहालयः

– वृन्दा बिजूर , मुम्बई

एम्स्टरडॅमतः षष्टि-किलोमीटरदूरम् एपन् हॉल् (APEN HEUL) नाम कपीनाम् एकः सङ्ग्रहालयः अस्ति । अहं मम पुत्रस्य परिवारेण सह तत्र गतवती । एतस्मिन् सङ्ग्रहालये अष्टात्रिंशत्प्रकाराणां कपयः सन्ति ।

चीटिकाक्रयण-समये, स्वयंसेवकः सूचनाः अददात् - "स्मरणीयं यत् अत्र केचन कपयः स्वैरम् इतस्ततः भ्रमन्ति । ते पर्यटकानां कामपि हानिं न कुर्वन्ति। किन्तु स्ववस्तूनां सुरक्षितायाः दायित्वं पर्यटकानाम् एव अस्ति । अतः पर्यटकानां स्यूतानां कृते विशिष्टस्यूतानां प्रबन्धः अस्ति । मातापितृभ्यां शिशून् उत्थाय रिक्तं शिशुयानं नेतव्यम्" इति । 'रिक्तं शिशुयानं' तेन किमर्थम् उक्तं ज्ञातुमिच्छन्ति वा ? यतः प्रवेशद्वारस्य अन्तः एव पर्णमृग-कपयः (Squirrel monkeys) स्वच्छन्दम् इतस्ततः भ्रमन्तः आसन् । ते प्रथमं शिशुयानानाम् अन्वेषणं कृतवन्तः । शिशुयानेषु स्थापितान् स्यूतान् उद्घाट्य कोऽपि खाद्यपदार्थः अस्ति वा इति परीक्षणं कृतवन्तः । पुरुषाणां स्कन्धे उपविश्य तेषां कोषाणां सम्यक् अन्वेषणं कृतवन्तः। एतत् दृश्यं तु मनोरञ्जकं तथैव आनन्ददायकम् आसीत् ।



मार्गम् उभयतः जालाः आसन् । भिन्न-भिन्न-प्रकाराणां कपीनां वृक्षेषु आरोहणमवरोहणं दृष्ट्वा वयं हर्षिताः अभवन् । ते तेषां दीर्घपुच्छैः शाखान् गृहीत्वा आन्दोलनमारब्धवन्तः । केचन कपयः तु केवलं शान्तम् उपविश्य पर्यटकानां निरीक्षणं कृतवन्तः । सर्वत्र कपिप्रकाराणां विषये फलकाः आसन् । फलकान् पठित्वा कपीनां प्रकारं ज्ञातुं शक्यम् अभवत् ।

मार्गे मध्ये उपाहारगृहाणि आसन् । पर्यटकाः श्रान्ताः भवन्ति चेत् तत्र किञ्चित् समययापनं कर्तुं शक्नुवन्ति। सम्पूर्ण-सङ्ग्रहालयस्य दर्शनार्थं ४-५ होराः आवश्यकाः ।

भीम-वानराणां (गोरिल्ला) कार्यक्रमः अपि अद्भुतः यत् अरण्यसदृशे स्थाने आयोजितः । सम्मर्दस्य कारणात् जनाः समयात् पूर्वमेव आगत्य क्रीडाभूम्यां प्रतीक्षां कुर्वन्ति स्म यतः तत्र आसन्दाः मर्यादिताः आसन् । वयम् अपि समयस्य पूर्वमेव आसन्दान् स्वीकृतवन्तः । क्रीडाभूम्याः तथा अरण्यस्य मध्ये जलस्रोतः आसीत्। अतः भीमवानराः जलस्रोतं लङ्घयितुम् असमर्थाः ।

तत्र एकः २०० किलो परिमितः महाकायः वृद्धः भीमवानरः उपविष्टः आसीत् । तदनन्तरं शनैः शनैः अन्ये त्रयः भीमवानराः द्विवर्षीय-शिशुना सह आगत्य भिन्नभिन्नस्थानेषु उपविष्टवन्तः । सः शिशुः वृद्धवानरस्य

समीपे गतवान् । यथा पितामहः स्वपौत्रं लालयति तथा वृद्धवानरः तं शिशुं लालितवान् । तान् अनुसृत्य द्वौ सामान्य-कपी आगतवन्तौ । तौ काष्ठसोपानस्य आरोहण-अवरोहणं कृतवन्तौ अधः क्रीडितवन्तौ च।

तदैव तेषां निर्देशकः हस्ते यानपेटिकां(suitcase) गृहीत्वा आगच्छत् । सः प्रथमं डच्-भाषायां किञ्चित् विवरणं दत्तवान् । तस्य पेटिकायां पुष्पशाकाः, नारङ्गाः, स्वादुमूलकमित्यादीनि आसन् । निर्देशकः प्रथमं वृद्धवानरस्य पुरतः एकं नारङ्गफलं क्षिप्तवान् तदनन्तरम् अन्यत्रयवानराणां तथा शिशोः पुरतः भिन्नभिन्नशाकान् क्षिप्तवान् । प्रत्येकः वानरः अनुशासनं पालितवान् । किम् ? अनुशासनं पालयन् वानरः इति श्रुत्वा आश्चर्यं जातं न वा ? निर्देशकः अवदत् यत् तत् तु आसीत् तेषां कृते सहभोजनम् एव ।

तेषां प्रशिक्षणदातारः सर्वथैव स्तुतिपात्राः एव । तत् कपिसङ्ग्रहालयगमनं तु मम कृते विलक्षणः अनुभवः आसीत् ।

ततः वयम् अग्रे गतवन्तः । मार्गे लघुकपयः भ्रमन्तः आसन् । तेषां पुच्छाः तु अतीव दीर्घाः । ते पर्यटकानां मध्ये मार्गक्रमणं कृतवन्तः । जनाः अपि तान् उन्नीय लालनं कृतवन्तः च । तस्मात् ते कपयः अपि सन्तुष्टाः अभवन् ।

यदा वयं निर्गन्तुम् अग्रे गतवन्तः तदा तत्र एकस्मिन् लघुप्रकोष्ठे भित्त्याः उपरि एकं सङ्कीर्ण-काष्ठफलकम् अस्माभिः दृष्टः । फलके मार्जारशावकाः इव दृश्यमानाः सप्त-लघु कपयः आसन् । फलके इतस्ततः अटन्तः ते तु अतीव आकर्षकाः भासितवन्तः । कोऽपि पर्यटकः कपीन् न स्पृशति इति लक्षितुं तत्र एकः कार्यकर्ता स्थितः आसीत् ।

जनानां विरामस्य कृते तत्र सुखासन्दानां व्यवस्था आसीत् । तेषां पृष्ठतः विशालभीम-वानराणां छायाचित्राणि आसन् । सोफासन्दे उपविश्य छायाचित्रं ग्रहीतुं शक्यमासीत् ।

एवम् अस्माकं समयः एपन् हॉल् कपिसङ्ग्रहालये अतीव उत्तमरीत्या व्यतीतः । अयं तु मम कृते एकः सुन्दरः चिरस्मरणीयः अनुभवः एव ।



बालरञ्जनी

# लीला रामलल्लायाः

**– साधना काप्किणि , बेङ्गलूरु**

अयोध्याराज्ये सर्वत्र उत्सवस्य वातावरणम् आसीत्। दशरथस्य चतुर्णां पुत्राणां जन्मना सर्वत्र दिव्यता प्रसृता आसीत् । वर्धमानाः सुकुमाराः जनानां कौतुकस्य विषयः एव । शनैः शनैः बालाः द्विवर्षीयाः जाताः । कीदृशाः आकर्षकाः ! अयोध्यानागरिकाः तेषां श्लाघनं कुर्वन्ति स्म । बालेषु ज्येष्ठः रामः जनप्रियः । सर्वे प्रेम्णा तं 'रामलल्ला' इति नाम्ना आह्वयन्ति स्म ।

रामलल्ला तु स्वयम् एकः तेजस्वी सुन्दरः चतुरः आनन्ददायकः च बालः आसीत् । चेष्टालुः तु आसीदेव सः । भोजनसमये तु मा पृच्छतु ।

प्रायः दशरथः एव तेन भोजनं खादयितुम् उत्साहेन उपविशति स्म । तत्परा कौशल्या तस्य साहाय्यार्थं पार्श्वे उपस्थिता भवति स्म ।

जनकं दृष्ट्वा रामलल्ला हसन् आनन्देन इतस्ततः अटति स्म । तदा जनकदशरथः प्रीत्या तम् आह्वयन् आसीत् , "भोः राम ! मम वत्स ! आगच्छ ! पश्य किञ्चित् ! अम्बा कियतः रुचिकरान् खाद्यपदार्थान् कारितवती तव
कृते ! " अम्बा कौशल्या रामस्य हस्तं धृत्वा तं दशरथस्य समीपम् आनयति स्म। " चित्तचोरः अन्ततो गत्वा गृहीतः एव " इति चिन्तयन् दशरथः हस्ते अन्नग्रासं धृत्वा तेन खादयितुं यदा उद्युक्तः भवति स्म तदा एव अस्माकं रामलल्ला ततः हसन् पलायनं करोति स्म । तस्य पृष्ठे सेविका ... तासां पृष्ठे कौशल्या । ओहोहो ! दर्शनीयं दृश्यं खलु ! रामलल्लायाः कट्याभरणनूपुराणां किङ्किणीनादं प्रासादे सर्वान् आह्लादयति स्म । मन्त्रमुग्धः दशरथः एतत् सर्वं दृष्ट्वा " मम अयं बालः कीदृशं सर्वान् नर्तयति" इति विचिन्त्य उच्चैः हसति स्म ।

चिरकालानन्तरमपि दशरथः पुनः पुनः अस्य मनोहरदृश्यस्य स्मरणेन सन्तृप्तिं प्राप्नोति स्म ।



विभा कैलाजे, मुम्बई

भोजनानन्तरं माताकौशल्यायाः मधुरं स्वापगीतं श्रुत्वा रामलल्ला पर्यङ्के निद्राति स्म । बालस्य मुग्धं मुखकमलं स्नेहेन वात्सल्येन च पश्यतः स्म कौशल्या दशरथः च ।

रामलल्लायाः लीला इतः एव आरब्धा ।

भोः ! एतं रामलल्लाम् एकवारं द्रष्टुं तीव्रा इच्छा मनसि उत्पन्नाभवत् किल? अहो अस्माकं सौभाग्यम् ! अधुना अयोध्यायाम् एव सः विराजते ! विलम्बेन अलम् ! त्वरया गच्छामः अयोध्याम् ! पश्यामः रामलल्लाम् । तस्य दर्शनेन अनुभवामः धन्यताम् ।

श्रीरामाय भूयो भूयो नमः ।

## बालरञ्जनी

### प्रहेलिकाः

– साधना काफ्किणि , बेङ्गलूरु

१. अहं श्रीरामस्य अनुजस्य पत्नी । मम नाम 'ऊ' अक्षरेण आरभते।
का अहम् ?

२. अहं रजनीशः इति सर्वे वदन्ति । रामस्य बाल्यावस्थायां प्रसिद्धा कथा मम उपरि एव निर्धारिता अस्ति । मम नाम ' च ' अक्षरेण आरभते ।
कोऽहम् ?

३. अहं श्रीरामस्य प्रियम् आयुधम् ! मम नाम ' क ' अक्षरेण आरभते ।
कोऽहम् ?

४. मम अद्भुतैः गुणैः लक्ष्मणः पुनर्जीवनं प्राप्तवान्।
मम नाम ' स ' अक्षरेण आरभते । का अहम् ?

५. सीतां लङ्कातः आनेतुं वानराणां हस्तैः सागरस्य उपरि अभवत् मम निर्माणम् - मम नाम ' स ' अक्षरेण आरभते । कोऽहम् ?

६ सीतायाः अपहरणं दृष्ट्वा महद्दुःखम् अनुभूय अहं रावणस्य विरोधं कृतवान् । मम नाम ' ज ' अक्षरेण आरभते । कोऽहम् ?

उत्तराणि त्रयोदशे पृष्ठे दत्तानि ।

**यावत् स्थास्यन्ति गिरयस्सरितश्च महीतले ।**
**तावद्रामायणकथा लोकेषु प्रचरिष्यति ॥**
( रामायणम् - १.२.३६ )

## रुचिरा

### बिम्ब-काजूतक-व्यञ्जनम्
( तेण्डली-बिब्बॉ-उपकरी )

**- सुधा बेट्रबेट, चेन्नई**



### साहित्यम् –

१. बिम्बानि – २५० ग्रॅममितानि
२. मृदु-काजूतकाः – १ चषक-मिताः
३. लवणम् – स्वादानुसारम्
४. घर्षित-नारिकेलम् – ४ चमसमितम्
५. तैलम् – चमसद्वयम्
६. माषाः – अर्धचमस-मितम्
७. सर्षपाः – अर्धचमस-मितम्
८. रक्तमरिचम् – २
९. हिङ्गुः – १/४ चमस-मितम्
१०. गिरिनिम्बपत्राणि – ८



### कृतिः –

- प्रथमं मृदु-काजूतकान् उष्णजले घण्टाद्वयं यावत् निमज्जयतु । तदनन्तरं तेषाम् अर्धखण्डान् करोतु ।
- बिम्बानां दीर्घखण्डान् करोतु ।
- चुल्लिकायां पात्रं स्थापयित्वा तस्मिन् तैलम् उष्णं करोतु । तैले एकैकशः – सर्षपान् , माषान् , रक्तमरिचे , हिङ्गुं , गिरिनिम्बपत्राणि च योजयतु ।
- यदा व्याघरणं सिद्धं भवति तदा शाक-खण्डान् मृदु-काजूतक-खण्डान् च योजयित्वा स्वादानुसारं लवणं तथा किञ्चित् जलम् अपि योजयतु ।
- शाकं पक्तुम् आच्छादनं स्थापयतु ।
- यदा पक्वं भवति तदा घर्षित-नारिकेलं योजयित्वा शाकं सम्यक् आलोडयतु ।

परिवेषणाय रुचिकरं तथा पौष्टिकं शाकं सिद्धं भवति ।

## हास्यकणिका

**- दुर्गा कुम्टा , मुम्बई**



सौरभः अम्बां दूरध्वनिं कृत्वा नीचैः वदति, "अम्ब, तात अस्ति वा गृहे ?"

अम्बा – किमर्थम्?

सौरभः – मम परीक्षायाः निर्णयः प्राप्तः । त्रिषु विषयेषु अनुत्तीर्णोऽहम् । कथमिति न जानामि । अहं तु सम्यक् पठितवान् । अम्ब, सायङ्काले गृहमागच्छामि । कृपया तातस्य मनोदशां प्रसन्नां करोतु । तातं सिद्धं करोतु ।

अम्बा – सौरभ, अलं स्पष्टीकरणेन । तातः जानाति सर्वम् । सः तु सिद्धः अधुना त्वं सिद्धः भव । सः तवैव प्रतीक्षां करोति ।"

# तस्मै पाणिनये नमः

**- शुभदा वकनळ्ळी, टोरोन्टो**

**- शीला कलावर , ठाणे**

गतपत्रिकायाः आरभ्य वयम् इत्-संज्ञायाः विषये चर्चां कुर्वन्तः स्मः । इत्-संज्ञाविधायकसूत्राणाम् आवल्यां क्रमेण द्वितीयं सूत्रम् अस्ति **हलन्त्यम् (१.३.३)** ।

हल् नाम किम् ? हल् नाम सर्वाणि व्यञ्जनानि (consonants) । उपदेशावस्थायां धातोः वा प्रत्ययस्य वा अन्ते हल् वर्णः अस्ति चेत् तस्य हल्-वर्णस्य इत् इति संज्ञया नामकरणं क्रियते । अस्य नियमस्य कानिचन उदाहरणानि यथा -

**१. राम (प्रातिपदिकम्) + सुँप् (प्रत्ययः)**

- अत्र प्रत्यये प् इति अन्तिम-वर्णः हल् अस्ति । **हलन्त्यम् (१.३.३)** इति प्रकृतसूत्रेण प् वर्णस्य 'इत्' संज्ञा भवति ।
- **उपदेशेऽजनुनासिक इत् (१.३.२)** इत्यनेन सूत्रेण प्रत्यये वर्तमानस्य अनुनासिक-उकारस्य (उँ) अपि इत् संज्ञा भवति ।
- तर्हि आहत्य कति वर्णाः इत् इति संज्ञां लभन्ते ? द्वौ – प् , उँ च ।
- अनन्तरं सुँप् प्रत्यये **तस्य लोपः (१.३.९)** इति सूत्रेण (प् उँ) एतयोः वर्णयोः लोपः भूत्वा लौकिकरूपं ' स् ' इत्येव अवशिष्यते । राम + सुँप् → राम + सुँ → राम + स् → अन्या प्रक्रिया भूत्वा → रामः (प्रथमा विभक्तिः एकवचनरूपम्) इति सिध्यति ।

**२. सेव् (धातुः) + महिङ् (प्रत्ययः)**

- अत्र प्रत्यये अन्तिमवर्णः ङ् इति हल् वर्णः अस्ति । **हलन्त्यम् (१.३.३)** इति प्रकृतसूत्रेण ङ् वर्णस्य इत् संज्ञा भवति ।
- तर्हि आहत्य कति वर्णाः इत् इति संज्ञां लभन्ते ? केवलं ङ् वर्णः ।
- अनन्तरं महिङ् प्रत्यये **तस्य लोपः (१.३.९)** इत्यनेन सूत्रेण ङ् वर्णस्य लोपः भूत्वा 'महि' इत्येव अवशिष्यते ।
- सेव् + महिङ् → सेव् + महि → अन्या प्रक्रिया भूत्वा → सेवामहि (लट् लकारः उत्तमपुरुषः बहुवचनरूपम् ) इति सिध्यति।

**३. लिख् (धातुः) + तुमुँन् (प्रत्ययः)**

तुमुँन् इति एकः अन्यः प्रत्ययः । सः प्रत्ययः धातुभ्यः विधीयते ।

- अत्र प्रत्यये अन्तिमवर्णः न् इति हल् वर्णः । **हलन्त्यम् (१.३.३)** इति प्रकृतसूत्रेण न् वर्णस्य इत् संज्ञा भवति ।

- **उपदेशेऽजनुनासिक इत् (१.३.२)** इत्यनेन सूत्रेण मकारोत्तरवर्तिनः उँ इत्यस्य वर्णस्य अपि इत् संज्ञा भवति।
- तर्हि आहत्य कति वर्णाः इत् इति संज्ञां लभन्ते ? द्वौ – न् , उँ च ।
- अनन्तरम् उभयोः वर्णयोः **तस्य लोपः (१.३.९)** इत्यनेन सूत्रेण लोपः अपि भवति ।
- लिख् + तुम् → अन्या प्रक्रिया भूत्वा → लेखितुम् इति सिध्यति ।

**४. दशरथ (प्रातिपदिकम्) + इञ् (प्रत्ययः)**

- इञ् इति अन्यः एकः प्रत्ययः । सः प्रत्ययः प्रातिपदिकेभ्यः विधीयते ।
- अत्र इञ् प्रत्यये अन्तिमवर्णः ञ् इति हल् वर्णः । **हलन्त्यम् (१.३.३)** इति प्रकृतसूत्रेण ञ् वर्णस्य इत् संज्ञा भवति ।
- तर्हि आहत्य कति वर्णाः इत् इति संज्ञां लभन्ते ? केवलं ञ् वर्णः ।
- अनन्तरं **तस्य लोपः (१.३.९)** इत्यनेन सूत्रेण ञ् वर्णस्य लोपः भूत्वा इ इत्येव अवशिष्यते ।
- दशरथ + इ → अन्या प्रक्रिया भूत्वा → दाशरथिः (रामः) इति सिध्यति ।

## अभ्यासः

**कोष्ठके लिखितेषु धातुषु प्रत्ययेषु च इत् संज्ञक-वर्णः कः?**

**प्रथमम् उदाहरणं दृष्ट्वा विचिन्त्य उत्तराणि योजयत ।**

| धातुः / प्रत्ययः (औपदेशिकः) | इत्-संज्ञक वर्णाः | इत्-संज्ञक सूत्रम् | लौकिकरूपम् | प्रयोगः |
|---|---|---|---|---|
| **I. धातवः** | | | | |
| शीङ् (स्वप्ने) | ङ् | हलन्त्यम् (१.३.३) | शी | शेते |
| दैप् शोधने | | हलन्त्यम् (१.३.३) | दा | दायति |
| श्रिञ् सेवायाम् | | हलन्त्यम् (१.३.३) | श्रि | श्रयति / श्रयते |
| **II. प्रत्ययाः** | | | | |
| ष्वुन् (कृत् प्रत्ययः) | न् | हलन्त्यम् (१.३.३) | वु = अक | नृत् + अक = नर्तकः |
| ष्यञ् (तद्धित प्रत्ययः) | | हलन्त्यम् (१.३.३) | य | बाल + य = बाल्य |
| टाप् (स्त्री प्रत्ययः) | | हलन्त्यम् (१.३.३) | आ | बाल + आ = बाला |

**तस्य लोपः (१.३.९) इति सूत्रेण उपरि-निर्दिष्टानाम् इत्-संज्ञकवर्णानां लोपः भवति ।**

उत्तराणि त्रयोदशे पृष्ठे दत्तानि ।



## योगविषये किञ्चित् ...

**लेखः – मीनाक्षी बलजेकर, ठाणे**
**अनुवादः – वैशाली कोप्पीकर, बेङ्गलूरु**

## वृक्षासनम्

अस्मिन् आसने शरीरस्य आकारः वृक्षः इव भवति अतः वृक्षासनः इति अस्य नाम ।

**कृतिः**

वृक्षवत् स्थित्वा करणीयम् आसनम् इदम् । पादद्वयोः मध्ये सप्त अष्ट वा अङ्गुलमितम् अन्तरं भवतु । दृष्टिः पुरतः स्थिरीभवतु । शरीरस्य सम्पूर्णः भारः वामपादे भवतु । शनैः शनैः दक्षिणपादमुन्नीय वामजङ्घायाः उपरि आरोपयतु । नमस्कारमुद्रायां करद्वयम् उरसः समीपं स्थापनीयम् अथवा शिरसः उपरि सरलम् उन्नेतव्यम् । यावत् शक्यं तावत् समयं तस्यामेव अवस्थायां स्थिरीभवितुं प्रयासः भवेत् । अपरेण पादेनापि समाना एव कृतिः साधनीया ।

**लाभाः**

- शारीरिक-तथैव-मानसिक-लाभान् प्राप्तुं शक्नुमः ।
- मानसिकस्थैर्यं शान्तता च प्राप्यते ।
- गुल्फौ, जङ्घापिण्डौ, सक्थिनी च प्रबलाः भवन्ति । इदमासनं दैनिकं भवति चेत् विपुलं लाभं प्राप्तुं शक्नुमः ।

**वर्ज्यम्**

- उच्चरक्तचापः / रक्तविक्षेपः , गुल्फयोः अशक्तता , वेदना अस्ति चेत् भित्तिमवलम्ब्य शनैः शनैः आसनमेतत् करणीयम् ।

सर्वेषां निरामयम् आरोग्यं कामयामहे ।

## जानन्ति वा ?

**-दीपा चन्दावर , कोल्हापूर**

किं भवन्तः जानन्ति वा यत् विविधानि औषधानि सन्ति यानि औषधालये न प्राप्यन्ते ?

१) व्यायामः ।
२) प्रातः-सायं भ्रमणम् ।
३) मित-सात्त्विकाहारः।
४) क्वचित् उपवासः ।
५) हास्य-विनोदः ।
६) गभीरा निद्रा ।
७) सर्वैः सह सम्भूय जीवन-यापनम् ।
८) सकारात्मक-विचाराः ।
९) परस्पर-आदरः स्नेहः च ।
१०) ध्यानम् ।

अहो आश्चर्यम् ! एतानि सर्वाणि औषधानि सर्वथा निःशुल्कानि ! नियमितरूपेण एतेषां सेवनं भवेत् चेत् जीवनं सर्वदा सुखमयम् एव !

## उत्तराणि

**प्रहेलिकाः** १. ऊर्मिला
२. चन्द्रः
३. कोदण्डः
४. सञ्जीवनी
५. सेतुः
६. जटायुः

**तस्मै पाणिनये नमः** अभ्यासः

| धातुः / प्रत्ययः (औपदेशिकः) | इत्-संज्ञक वर्णाः | इत्-संज्ञक सूत्रम् | लौकिकरूपम् | प्रयोगः |
|---|---|---|---|---|
| **I. धातवः** | | | | |
| शीङ् (स्वप्ने) | ङ् | हलन्त्यम् (१.३.३) | शी | शेते |
| दैप् शोधने | प् | हलन्त्यम् (१.३.३) | दा | दायति |
| श्रिञ् सेवायाम् | ञ् | हलन्त्यम् (१.३.३) | श्रि | श्रयति / श्रयते |
| **II. प्रत्ययाः** | | | | |
| ष्वुन् (कृत् प्रत्ययः) | न् | हलन्त्यम् (१.३.३) | वु = अक | नृत् + अक = नर्तकः |
| ष्यञ् (तद्धित प्रत्ययः) | ञ् | हलन्त्यम् (१.३.३) | य | बाल + य = बाल्य |
| टाप् (स्त्री प्रत्ययः) | प् | हलन्त्यम् (१.३.३) | आ | बाल + आ = बाला |

# कैवल्योपनिषदि केचन श्लोकाः

**– कृष्णानन्द मङ्कीकर , मुम्बई**

अस्माभिः पूर्वे संस्करणे अयं श्लोकः दृष्टः।

**सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।**

**सम्पश्यन् ब्रह्म परमं याति नान्येन हेतुना ॥ १० ॥**

अत्र परमं ब्रह्म यातव्यमिति उक्तम् । तत्कथं कर्तव्यमिति अग्रिमे श्लोके दर्शितम् अस्ति ।

**आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।**

**ज्ञाननिर्मथनाभ्यासात्पाशं दहति पण्डितः ॥ ११ ॥**

अरणिः तथा उत्तरारणिः इति द्वे अग्निमथनाय यज्ञकार्येषु प्रयुज्येते। अध्वर्युः ( प्रमुखः अर्चकः यः यज्ञकार्यं करोति) उत्तरारणिं हस्ताभ्यां गृहीत्वा अरणिं मथति तथा अग्निं प्रज्वालयति । एवमेव प्रणवरूपिणीम् उत्तरारणिं गृहीत्वा, स्वात्मानम् अरणिं कृत्वा, ज्ञानस्य निर्मथनम् अभ्यासपूर्वकं कृत्वा एव, परब्रह्म-दर्शनं कर्तुं पण्डितः यतेत इत्युक्तमत्र ।

अत्र ज्ञानयज्ञः परिकल्पितः मुनिना । यथा यज्ञे अरणिमथनम् आदिमं कार्यं , तथैव ज्ञानयज्ञसमारम्भे अपि ॐकारसाधनया ज्ञानयज्ञः अवश्यम् आरब्धव्यः । श्रीमद्भगवद्गीतायामपि भगवता उक्तं यत् , “श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप” इति । अपितु पुनरुक्तं भगवता “न हि ज्ञानेन सदृशं पवित्रमिह विद्यते” इति । तस्मात् यः परमं ब्रह्म सन्द्रष्टुमिच्छति, तेन ज्ञान-निर्मथन-अभ्यासः अवश्यं कर्तव्यः इत्यत्र तात्पर्यम् ।

अग्रिमौ द्वौ श्लोकौ मनुष्याणाम् अवस्थात्रयवर्णनं कुरुतः ।

**स एव माया परिमोहितात्मा शरीरमास्थाय करोति सर्वम् ।**

**स्त्रियन्नपानादिविचित्रभोगैः स एव जाग्रत्परितृप्तिमेति ॥ १२ ॥**

**स्वप्ने स जीवः सुखदुःखभोक्ता,**

**स्वमायया कल्पितजीवलोके ।**

**सुषुप्तिकाले सकले विलीने**

**तमोऽभिभूतः सुखरूपमेति ॥ १३ ॥**

द्वादशे तथा त्रयोदशे श्लोके, मनुष्यस्य (जीवात्मनः) अवस्थात्रयं वर्णितमस्ति । यथा, जागृतः जीवात्मा, शरीरम् आस्थाय सर्वं कर्म करोति। कानि कर्माणि करोति ? स्त्रीसङ्गम् , अन्नग्रहणं तथा उदक-सुरापानं वा इत्यादीन् विचित्रभोगान् प्रति आकृष्टः सन् सः कालं यापयति। सः मायया परिमोहितः विचित्राणां भोगानाम् अनुभूतिं कृत्वा तृप्तिम् एति ।

स एव जीवः स्वप्नावस्थायां तेनैव कल्पिते जगति सुखस्य वा दुःखस्य वा अनुभूतिं प्राप्नोति तथा सुषुप्तिकाले, यतः सर्वं विलीनं भवति तस्मात् स एव जीवः सुखरूपः एव भवति ।

इदमवस्थात्रयम् अस्माकं वेदान्तशास्त्रे नानाविधैः पण्डितैः, शास्त्रिभिः, व्याख्यातृभिः च चर्चितमस्ति अतीव गभीरतया ।

इत्यलम् इदानीम् । अग्रिमे संस्करणे अन्यान् कांश्चित् श्लोकान् पश्यामः ।

शुभं भवतु ।

**सम्पादिका –** वरदा सौकूर
**पृष्ठरचना –** वन्दना बळवळ्ळी
**सम्पादकीयसमितिः –** शीला कळावर , दुर्गा कुम्टा , अर्चना काप्राडक , सुधा कार्नाड , शिल्पा मुदूर
**सम्पादकीयसाहाय्यम् –** तेजश्री बैलूर

**अभिप्रायं तथा लेखं प्रेषयितुम् इच्छुकानाङ्कृते सम्पर्कः -**
**Email id: girvanapatrika@chitrapurmath.net.in** (लेखार्थं शब्दमर्यादा-२५०)